॥ श्रीसुब्रह्मण्य ध्यानम् ॥

षडाननं कुङ्कुमरक्तवर्णं
महामतिं दिव्यमयूरवाहनं
रुद्रस्यसूनुं सुरसैन्यनाथं
गुहं सदा शरणमहं प्रपद्ये ॥ १॥

कनककुण्डलमण्डितषण्मुखं
कनकराजिविराजितलोचनं
निशितशस्त्रशरासनधारिणं
शरवणोत्भवमीशसुतं भजे ॥ २॥

सिन्दूरारुणमिन्दुकान्तिवदनं
केयूरहारादिभिः
दिव्यैराभरणैर्विभूषिततनुं
स्वर्गस्यसौख्यप्रदं
अम्भोजाभयशक्ति कुक्कुटधरं
रक्ताङ्गरागांशुकं
सुब्रह्मण्यमुपास्महे प्रणमतां
सर्वार्थसंसिद्धिदम् ॥ ३॥

वन्दे शक्तिधरं शिवात्मतनयं
वन्दे पुळिन्दापतिं
वन्दे भानुसहस्रमद्बुदनिभं
वन्दे मयूरासनं
वन्दे कुक्कुटकेतनं सुरवरं
वन्दे कृपाम्भोनिधिं
वन्दे कल्पकपुष्पशैलनिलयं
वन्दे गुहं षण्मुखम् ॥ ४॥

द्विषड्भुजं षण्मुखमम्बिकासुतं
कुमारमादित्यसमानतेजसं
वन्दे मयूरासनमग्निसम्भवं
सेनान्यमद्याहमभीष्टसिद्धये ॥ ५॥

ध्यायेत् षण्मुखमिन्दु कोटिसदृशं
रत्नप्रभाशोभितं
बालार्कद्युति षट्किरीटविलसत्-

केयूरहारानन्वितं
कर्णालंकृत कुण्डलप्रविलसत्
कण्ठस्थलैः शोभितं
काञ्ची कङ्कण किङ्किणीरवयुतं
शृङ्गार सारोदयम् ॥ ६॥

ध्यायेदीप्सितसिद्धितं शिवसुतं
श्रीद्वादशाक्षं गुहं
बाणङ्केटकमङ्कुशञ्चवरदं
पाशं धनुःशक्रकं
वज्रंशक्तिमसिन्त्रिशूलमभयं
दोर्भिर्धृतं षण्मुखं
भास्वच्छत्रमयूरवाहसुभगं
चित्राम्बरालंकृतम् ॥ ७॥

गाङ्गेयं वह्निगर्भं शरवणजनितं
ज्ञानशक्तिं कुमारं
सुब्रह्मण्यं सुरेशं गुहमचलदिदं
रुद्रतेजस्वरूपं
सेनान्यं तारकघ्नं गजमुखसहजं
कार्तिकेयं षडास्यं
सुब्रह्मण्यं मयूरध्वजरथसहितं
देवदेवं नमामि ॥ ८॥

षण्मुखं द्वादशभुजं द्वादशाक्षं शिखिध्वजम् ।
शक्तिद्वयसमायुक्तं वामदक्षिणपार्श्वयोः ॥ ९॥

शक्तिंशूलं तथा खड्गं खेटञ्चापंशरं तथा ।
घण्टां च कुक्कुटञ्चैवपाशञ्चैवतथाङ्कुशम् ॥ १०॥

अभयं वरदञ्चैव धारयान्तं कराम्बुजैः ।
महाबलं महावीर्यं शिखिवाहं शिखिप्रभम् ॥ ११॥

किरीटकुण्डलोपेतं खण्डितोद्दण्डतारकम् ।
मण्डलीकृतकोदण्डं काण्डैःक्रौञ्चधराधरम् ॥ १२॥

दारयन्तं दुराधर्षं दैत्यदानवराक्षसैः ।
देवसेनापतिं देवकार्यैकनिरतं प्रभुम् ॥ १३॥

महादेवतनूजातं मदनायुतसुन्दरम् ।
चिन्तये हृदयाम्भोजे कुमारममितेजसम् ॥ १४॥

॥ इति श्री सुब्रह्मण्यध्यानं समाप्तम् ॥